लेपनार्थं गृहाणेदं हरिद्रा कुंकुमैर्युतं ॥

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । अंगोद्वर्तनं समर्पयामि ॥

---

३०. ६ उष्णोदक स्नानं (Hot water bath)

नाना तीर्थादाहृतं च तोयमुष्णं मयाकृतं ।
स्नानार्थं च प्रयश्चमे स्वीकुरुश्व दयानिधे ॥

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । उष्णोदक स्नानं समर्पयामि ॥

---

३१ शुद्धोदक स्नानं (Pure water bath)
sprinkle water all around
ॐ आपोहिष्टा मयो भुवः | ता न ऊर्जे दधातन |
महेरणाय चक्षसे | यो वः शिवतमो रसः
तस्यभाजयते ह नः |
उशतीरिव मातरः | तस्मा अरंगमामवो |
यस्य क्षयाय जिन्वथ | आपो जनयथा च नः ||

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | शुद्धोदक स्नानं समर्पयामि||
(after sprinkling water around throw one tulsi leaf to the north)

---

३२ महा अभिषेकः
(Sound the bell pour water from kalasha)
श्री सूक्त

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् |
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह || १.|

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् |
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् || २ ||

अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् |
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् || ३ ||

कांसोस्मि तां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् |
पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् || ४ ||
चन्द्रां प्रभासां यशसा ज्वलंतीं श्रियं लोके देवजुष्टामुदाराम् |
तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे || ५ ||

आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः |
तस्य फलानि तपसानुदन्तुमायान्तरायाश्च बाह्या अलक्ष्मीः || ६ ||

उपैतु मां देवसखः कीर्तिश्च मणिना सह |
प्रादुर्भूतोऽस्मि राष्ट्रेस्मिन्कीर्तिमृद्धिं ददातु मे || ७ ||

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् |
अभूतिमसमृद्धिं च सर्वां निर्णुदमे गृहात् || ८ ||

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् |
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् || ९ ||

मनसः काममाकूतिं वाचः सत्यमशीमहि |
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः || १० ||

कर्दमेन प्रजाभूतामयि सम्भवकर्दम |
श्रियं वासय मे कुले मातरं पद्ममालिनीम् || ११ ||

आपः सृजन्तु स्निग्धानि चिक्लीतवसमे गृहे |
निचदेवीं मातरं श्रियं वासय मे कुले || १२ ||
आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् |
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह || १३ ||

आर्द्रां यःकरिणीं यष्टिं पिङ्गलां पद्ममालिनीम् |
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह || १४ ||

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् |
यस्यां हिरण्यं प्रभूतं गावोदास्योश्वान्विन्देयं
पुरुषानहम् || १५ ||

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् |
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् || १६ ||

पद्मानने पद्म ऊरू पद्माक्षी पद्मसम्भवे |
तन्मेभजसि पद्माक्षी येन सौख्यं लभाम्यहम् || १७||

अश्वदायी गोदायी धनदायी महाधने |
धनं मे जुषतां देवि सर्वकामांश्च देहि मे || १८ ||

पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि|
विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि
संनिधत्स्व || १९ ||

पुत्रपौत्रं धनं धान्यं हस्त्यश्वादिगवेरथम् |
प्रजानां भवसि माता आयुष्मन्तं करोतु मे || २० ||

धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः |
धनमिन्द्रो बृहस्पतिर्वरुणं धनमस्तु ते || २१ ||
वैनतेय सोमं पिब सोमं पिबतु वृत्रहा |
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः || २३ ||

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | श्री सूक्त स्नानं समर्पयामि||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | महाअभिषेक स्नानं समर्पयामि||

---

३३ प्रतिष्ठापना

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः ‖ (repeat 12 times)
| सुप्रतिष्ठमस्तु ||

---

३४ वस्त्र

(offer two pieces of cloth for the Goddess)

दुकूलद्वितयं देवि दुरितापहवैभवे ।
विधिप्रिये गृहाणेदं सुधानिधिसमं शिवे ।

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । वस्त्रयुग्मं समर्पयामि ॥
May I offer you two auspicous silk clothes, O! the Consort of Brahma, who destroys all afflictions. (Place two flowers on the godess. )

---

३५.१ कंचुकी

नवरत्नाभिर्दधां सौवर्णैश्चैव तंतुभिः ।
निर्मितां कंचुकीं भक्त्या गृहाण परमेश्वरी ।।
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । कंचुकीं समर्पयामि ।।

---

३५.२ कण्ठ सूत्र

मांगल्य तंतुमणिभिः मुक्तैश्चैव विराजितं |
सौमंगल्याभिवृध्यर्थं कंठसूत्रं ददामिते ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः |कंठसूत्रं समर्पयामि||

---

३५.३ पट्टसूत्रं

पट्टसूत्रं भव्यं दिव्यं स्वर्णपूर्ण कृतीयतम्|
सौमंगल्याभिवृद्यर्थं पत्तसूत्रं ददामि ते||

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः |पट्टसूत्रं समर्पयामि||

---

३५.४ हरिद्रा

हरिद्रा रंजिते देवी सुख सौभाग्य दायिनी |
हरिद्रां ते प्रदास्यामि गृहाण परमेश्वरि ||

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | हरिद्रा समर्पयामि||

---

३५.५ कुंकुम

कुंकुमं कामदं दिव्यं कामिनी काम संभवं |
कुंकुमार्चिते देवी सौभाग्यार्थं प्रतिगृह्यतां ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | कुंकुमं समर्पयामि||

---

३५.६ कज्जल

सुनील भ्रमराभसं कज्जलं नेत्र मण्डनं |
मया दत्तं इदं भक्त्या कज्जलं प्रतिगृह्यतां ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | कज्जलं समर्पयामि ||

---

३५.७ सिंदूर

विद्युत् कृशानु संकाशं जपा कुसुमसन्निभं |
सिन्दूरंते प्रदास्यामि सौभाग्यं देहि मे चिरं ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | सिन्दूरं समर्पयामि ||

---

३५.८ कङ्कणं

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः |कङ्कणं समर्पयामि||

---

३५. ९ नाना आभरणं

वर्णरूपे गृहाणेदं स्वर्णवर्य परिष्कृतम् ।
अर्णवोद्धृत रत्नाढ्यं कर्णभूषादि भूषणम् ॥

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । नाना आभरणानि समर्पयामि ||

---

३५. १० ताडपत्राणि

ताडपत्राणि दिव्याणि विचित्राणि शुभानि च |
कराभरणयुक्तानि मातस्तत्प्रतिगृह्यतां ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | ताडपत्राणि समर्पयामि ||

---

३५. ११ नाना परिमल द्रव्य

नाना सुगन्धिकम् द्रव्यम् चूर्णिकृत्य प्रयत्नतः ।
ददामि ते नमस्तुभ्यं, प्रीत्यर्तं प्रतिगृह्यतां ||

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | नाना परिमल द्रव्यं समर्पयामि ||

---

३६ यज्ञोपवीत

उपवीतं गृहाणेदं उपमाशून्यवैभवे ।
हिरण्यगर्भमहिषि हिरण्मयगुणैः कृतम् ।

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । यज्ञोपवीतं समर्पयामि ॥

---

३७ गंध

अन्धकारिप्रियाराध्ये गन्धमुत्तम सौरभम् ।
गृहाण वाणि वरदे गन्धर्व परिपूजिते ॥

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । गंधं समर्पयामि ॥

May I offer sandal paste to you, O! Vaani, who is worshipped by Shiva and Gandharvas.

(Offer sandal paste or flower in leiu of, to the Deity)

---

३८ अक्षत

अक्षतांस्त्वं गृहाणेमानहता नमरार्चिते ।
अक्षतेऽद्भुतरूपाढ्ये यक्षराजादिवन्दिते ॥

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । अक्षतान् समर्पयामि ॥

---

३९ पुष्प

पुन्नाग जाती मल्लयादि पुष्पजातं गृहाण मे ।
पुमर्थदायिनि परे पुस्तकाढ्य करांबुजे ॥

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । पुष्पाणि समर्पयामि ॥

May I offer flowers to you, O! devi, who holds the book in the hand and who is the bestower of aspirations of men.

(Place flowers at the feet of the Deity)

---

४० नाना अलंकार

कटि सूताङ्गुली येच कुण्डले मुकुठं तथा |
वनमालां कौस्तुभं च गृहाण सुलोचनि ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | नाना अलंकारान् समर्पयामि||

---

४१ अथ अङ्गपूजा

ॐ पावनायै नमः | पादौ पूजयामि ||
ॐ गिरे नमः | गुल्फौ पूजयामि ||

ॐ जगद्वन्द्यायै नमः । जंघै पूजयामि ॥
ॐ जलजासनायै नमः । जानुनी पूजयामि ॥
ॐ उत्तमायै नमः । ऊरून् पूजयामि ॥
ॐ कमलासनप्रियायै नमः । कटिं पूजयामि ॥
ॐ नानाविद्यायै नमः । नाभिं पूजयामि ॥
ॐ वाण्यै नमः । वक्षस्थलं पूजयामि ॥
ॐ कुरंगाक्ष्यै नमः । कुचौ पूजयामि ॥
ॐ कलारूपिण्यै नमः । कंठं पूजयामि ॥
ॐ भाषायै नमः । बाहून् पूजयामि ॥
ॐ चिरन्तनायै नमः । चिबुकं पूजयामि ॥
ॐ मुग्धस्मितायै नमः । मुखं पूजयामि ।
ॐ लोलेक्षणायै नमः । लोचनं पूजयामि ॥
ॐ कलायै नमः । ललाटं पूजयामि ॥
ॐ वर्णरूपायै नमः । कर्णौ पूजयामि ॥
ॐ करुणायै नमः । कचान् पूजयामि ॥
ॐ शिवायै नमः । शिरः पूजयामि ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । सर्वाङ्गाणि पूजयामि ॥

---

४२ अथ (नवशक्ति पूजा)

worship of nine powers

ॐ मेधायै नमः (intelligence)
ॐ श्रियाऐ नमः (wealth, affluence)
ॐ स्म्रित्यै नमः (memory)
ॐ प्रभायै नमः (effulgence)
ॐ पद्मायै नमः (fortune)
ॐ विद्यैश्वर्यै नमः (supreme knowledge)
ॐ प्रज्ञायै नमः (wisdom)
ॐ धृत्यै नमः (steady or firmminded)

---

४३ अथ पुष्प पूजा

ॐ कामरूपायै नमः । करवीर पुष्पं समर्पयामि ॥
ॐ जटिलायै नमः । जाजी पुष्पं समर्पयामि ॥
ॐ चण्डिकायै नमः । चम्पक पुष्पं समर्पयामि ॥
ॐ विद्यारूपायै नमः । वकुल पुष्पं समर्पयामि ॥
ॐ शास्त्ररूपिण्यै नमः । शतपत्र पुष्पं समर्पयामि ॥

ॐ कालरात्र्यै नमः । कल्हार पुष्पं समर्पयामि ॥
ॐ सौम्यायै नमः । सेवन्तिका पुष्पं समर्पयामि ॥
ॐ महाभद्रायै नमः । मल्लिका पुष्पं समर्पयामि ॥
ॐ सरस्वत्यै नमः । इरुवंतिका पुष्पं समर्पयामि ॥
ॐ ज्ञानमुद्रायै नमः । गिरिकर्णिका पुष्पं समर्पयामि ॥

ॐ अम्बिकायै नमः । आथसी पुष्पं समर्पयामि ॥
ॐ पद्माक्ष्यै नमः । पारिजात पुष्पं समर्पयामि ॥
ॐ परायै नमः । पुन्नाग पुष्पं समर्पयामि ॥
ॐ कलाधरायै नमः । कुन्द पुष्पं समर्पयामि ॥
ॐ महाबलायै नमः । मालति पुष्पं समर्पयामि ॥

ॐ कान्तायै नमः । केतकी पुष्पं समर्पयामि ॥
ॐ महाफलायै नमः । मन्दार पुष्पं समर्पयामि ॥
ॐ पद्मलोचनायै नमः । पातली पुष्पं समर्पयामि॥
ॐ वाण्यै नमः । अशोक पुष्पं समर्पयामि ॥
ॐ पद्मनिलयायै नमः । पूग पुष्पं समर्पयामि ॥

ॐ दिव्याङ्गायै नमः । दादिमा पुष्पं समर्पयामि ॥
ॐ देव्यै नमः । देवदारु पुष्पं समर्पयामि ॥

ॐ सुवासिन्यै नमः । सुगन्ध राज पुष्पं समर्पयामि॥
ॐ कामप्रदायै नमः । कमल पुष्पं समर्पयामि ॥

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः| पुष्पपूजां समर्पयामि॥

---

४४ अथ पत्र पूजा

ॐ सरस्वत्यै नमः । तुलसी पत्रं समर्पयामि ॥
ॐ महाभद्रायै नमः । जाजी पत्रं समर्पयामि ॥
ॐ महामायायै नमः । चम्पका पत्रं समर्पयामि ॥
ॐ वरप्रदायै नमः । बिल्व पत्रं समर्पयामि ॥
ॐ श्रीप्रदायै नमः । दूर्वायुग्मं समर्पयामि ॥

ॐ पद्मनिलयायै नमः । सेवन्तिका पत्रं समर्पयामि॥
ॐ पद्माक्ष्यै नमः । मरुग पत्रं समर्पयामि ॥
ॐ पद्मवक्त्रकायै नमः । दवन पत्रं समर्पयामि ॥
ॐ शिवानुजायै नमः । करवीर पत्रं समर्पयामि ॥
ॐ पुस्तकभृते नमः । विष्णु क्रान्ति पत्रं समर्पयामि॥

ॐ ज्ञानमुद्रायै नमः । माचि पत्रं समर्पयामि ॥
ॐ रमायै नमः । मल्लिका पत्रं समर्पयामि ॥
ॐ परायै नमः । इरुवन्तिका पत्रं समर्पयामि ॥
ॐ कामरूपायै नमः । अपामार्ग पत्रं समर्पयामि ॥
ॐ महाविद्यायै नमः । पारिजात पत्रं समर्पयामि ॥

ॐ महापातक नाशिन्यै नमः । दाडिमा पत्रं समर्पयामि ॥
ॐ महाश्रयायै नमः । बदरी पत्रं समर्पयामि ॥
ॐ मालिन्यै नमः । देवदारु पत्रं समर्पयामि ॥
ॐ महाभोगायै नमः । शामी पत्रं समर्पयामि ॥
ॐ महाभुजायै नमः । आम्र पत्रं समर्पयामि ॥

ॐ महाभागायै नमः । मन्दार पत्रं समर्पयामि ॥
ॐ महोत्साहायै नमः । वट पत्रं समर्पयामि ॥
ॐ दिव्याङ्गायै नमः । कमल पत्रं समर्पयामि ॥
ॐ सुरवन्दितायै नमः । वेणु पत्रं समर्पयामि ॥

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । पत्रपूजां समर्पयामि ॥

---

४५ Katha - Devi Mahatmyam

---

४६ अष्टोत्तर पूजा (chant dhyAna shloka )

नमस्ते शारदे देवि काश्मीरपुरवासिनि ।
त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ॥ १ ॥

I prostrate to Shaaradaa, the resident of kaashmira pura. I pray daily for you to grant me wisdom and knowledge.

(light the incense stick and play in a circular motion three times or place a flower in lieu of)

या श्रद्धा धारणा मेधा वाग्देवी विधिवल्लभा ।
भक्तजिह्वाग्रसदना शमादिगुणदायिनी ॥ २॥

नमामि यामिनीं नाथ लेखालङ्कृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥ ३॥
भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः ।
वेदवेदाङ्गवेदान्तविद्यास्थानेभ्य एव च ॥ ४॥
ब्रह्मस्वरूपा परमा ज्योतिरूपा सनातनी ।
सर्वविद्याधिदेवी या तस्यै वाण्यै नमो नमः ॥५॥
यया विना जगत्सर्वं शश्वज्जीवन्मृतं भवेत् ।
ज्ञानाधिदेवी या तस्यै सरस्वत्यै नमो नमः ॥६॥
यया विना जगत्सर्वं मूकमुन्मत्तवत्सदा ।
या देवी वागधिष्ठात्री तस्यै वाण्यै नमो नमः ॥७॥

ॐ सरस्वत्यै नमः ।
ॐ महाभद्रायै नमः ।
ॐ महामायायै नमः ।
ॐ वरप्रदायै नमः ।
ॐ श्रीप्रदायै नमः ।
ॐ पद्मनिलयायै नमः ।
ॐ पद्माक्ष्यै नमः ।
ॐ पद्मवक्त्रकायै नमः ।
ॐ शिवानुजायै नमः ।
ॐ पुस्तकभृते नमः ।

ॐ ज्ञानमुद्रायै नमः ।
ॐ रमायै नमः ।
ॐ परायै नमः ।
ॐ कामरूपायै नमः ।
ॐ महाविद्यायै नमः ।
ॐ महापातक नाशिन्यै नमः ।
ॐ महाश्रयायै नमः ।

ॐ मालिन्यै नमः ।
ॐ महाभोगायै नमः ।
ॐ महाभुजायै नमः ।

ॐ महाभागायै नमः ।
ॐ महोत्साहायै नमः ।
ॐ दिव्याङ्गायै नमः ।
ॐ सुरवन्दितायै नमः ।
ॐ महाकाल्यै नमः ।
ॐ महापाशायै नमः ।
ॐ महाकारायै नमः ।
ॐ महांकुशायै नमः ।
ॐ पीतायै नमः ।
ॐ विमलायै नमः ।

ॐ विश्वायै नमः ।
ॐ विद्युन्मालायै नमः ।
ॐ वैष्णव्यै नमः ।
ॐ चन्द्रिकायै नमः ।
ॐ चन्द्रवदनायै नमः ।
ॐ चन्द्रलेखाविभूषितायै नमः ।
ॐ सावित्यै नमः ।
ॐ सुरसायै नमः ।
ॐ देव्यै नमः ।
ॐ दिव्यालंकारभूषितायै नमः ।

ॐ वाग्देव्यै नमः ।
ॐ वसुदायै नमः ।
ॐ तीव्रायै नमः ।

ॐ महाभद्रायै नमः ।
ॐ महाबलायै नमः ।
ॐ भोगदायै नमः ।
ॐ भारत्यै नमः ।
ॐ भामायै नमः ।
ॐ गोविन्दायै नमः ।
ॐ गोमत्यै नमः ।

ॐ शिवायै नमः ।
ॐ जटिलायै नमः ।
ॐ विन्ध्यावासायै नमः ।
ॐ विन्ध्याचलविराजितायै नमः ।
ॐ चण्डिकायै नमः ।
ॐ वैष्णव्यै नमः ।
ॐ ब्राह्मयै नमः ।
ॐ ब्रह्मज्ञानैकसाधनायै नमः ।
ॐ सौदामन्यै नमः ।
ॐ सुधामूर्त्यै नमः ।

ॐ सुभद्रायै नमः ।
ॐ सुरपूजितायै नमः ।
ॐ सुवासिन्यै नमः ।
ॐ सुनासायै नमः ।
ॐ विनिद्रायै नमः ।
ॐ पद्मलोचनायै नमः ।
ॐ विद्यारूपायै नमः ।
ॐ विशालाक्ष्यै नमः ।
ॐ ब्रह्मजायायै नमः ।
ॐ महाफलायै नमः ।

ॐ त्रयीमूर्तये नमः ।
ॐ त्रिकालज्ञायै नमः ।
ॐ त्रिगुणायै नमः ।
ॐ शास्त्ररूपिण्यै नमः ।
ॐ शंभासुरप्रमथिन्यै नमः ।
ॐ शुभदायै नमः ।
ॐ स्वरात्मिकायै नमः ।
ॐ रक्तबीजनिहन्त्र्यै नमः ।
ॐ चामुण्डायै नमः ।
ॐ अम्बिकायै नमः ।

ॐ मुण्डकायप्रहरणायै नमः ।
ॐ धूम्रलोचनमदनायै नमः ।
ॐ सर्वदेवस्तुतायै नमः ।
ॐ सौम्यायै नमः ।
ॐ सुरासुर नमस्कृतायै नमः ।
ॐ कालरात्र्यै नमः ।
ॐ कलाधरायै नमः ।
ॐ रूपसौभाग्यदायिन्यै नमः ।
ॐ वाग्देव्यै नमः ।
ॐ वरारोहायै नमः ।

ॐ वाराह्यै नमः ।
ॐ वारिजासनायै नमः ।
ॐ चित्रांबरायै नमः ।
ॐ चित्रगन्धायै नमः ।
ॐ चित्रमाल्यविभूषितायै नमः ।
ॐ कान्तायै नमः ।

ॐ कामप्रदायै नमः ।
ॐ वन्द्यायै नमः ।
ॐ विद्याधरसुपूजितायै नमः ।
ॐ श्वेताननायै नमः ।

ॐ नीलभुजायै नमः ।
ॐ चतुर्वर्गफलप्रदायै नमः ।
ॐ चतुरानन साम्राज्यायै नमः ।
ॐ रक्तमध्यायै नमः ।
ॐ निरंजनायै नमः ।
ॐ हंसासनायै नमः ।
ॐ नीलजङ्घायै नमः ।
ॐ ब्रह्मविष्णुशिवात्मिकायै नमः ।

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः ॥ अष्टोत्तर पूजां समर्पयामि ॥

---

४७ धूपं

दशांग गुग्गुलं धूपं चन्दनागरु संयुतम् ।
समर्पितं मया भक्त्या महादेवि प्रतिगृह्यताम् ॥

वनस्पति रसोद्भूतो गन्धाड्यो गन्ध उत्तमः ।
धूपम्-दास्यामि देवेशि भवानि प्रतिगृह्यताम् ॥

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । धूपं आघ्रापयामि॥

---

४८ दीपं

घृतवर्तिसमायुक्तं महातेजो महोज्ज्वलम् ।
दीपं दास्यामि देवेशि सुप्रीता भव सर्वदा ॥
साज्यं त्रिवर्ति संयुक्तं वह्निना योजितुम् मया ।
गृहाण मङ्गलं दीपं वरदे भक्त वत्सले ॥
अक्षसूत्राङ्कुशधरा पाशपुस्तकधारिणी ।
मुक्ताहारसमायुक्ता वाचि तिष्ठतु मे सदा ॥
O! Saraswati, who is holding a noose, a book, and a rosary, please reside always on my tongue.

(play a lighted wick in a circular motion three times)
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । दीपं दर्शयामि ॥

---

४९ नैवेद्यं

( dip finger in water and write a square and 'shrii' mark inside the square. Place naivedya on 'shrii'. remove lid and sprinkle water around the vessel; place in each food item one washed leaf or flower or akshata )

ॐ शारदायै विद्महे । वाग्देवी च धीमहि ।
तन्नो सरस्वती प्रचोदयात् ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः ।
(show mudras) ;

निर्वीषी करणार्थे तार्क्ष मुद्रा ।
अमृती करणार्थे धेनु मुद्रा ।
पवित्री करणार्थे शंख मुद्रा ।
संरक्षणार्थे चक्र मुद्रा ।
विपुलमाय करणार्थे मेरु मुद्रा ।

(Touch naivedya and chant 9 times)'ॐ'
ॐ सत्यंतवर्तेन परिषिंचामि

(sprinkle water around the naivedya)
भोः! देवी भोजनार्थं आगच्छादि विज्ञाप्य |
(request Goddess to come for dinner)

सौवर्णे स्थालिवैर्ये मणिगण खचिते गोघृतां
सुपक्वां भक्ष्यां भोज्यां च लेह्यानपि
सकलमहं जोष्यम्न नीधाय नाना शाकैरूपेतं
समधु दधि घृतं क्षीर पानीय युक्तं
तांबूलं चापि देवि प्रतिदिवसमहं मनसा चिंतयामि ||

अद्य तिष्ठति यत्किञ्चित् कल्पितश्चापरंग्रिहे
पक्वान्नं च पानीयं यथोपस्कर संयुतं
यथाकालं मनुष्यार्थे मोक्ष्यमानं शरीरिभिः
तत्सर्वं देविपूजास्तु प्रयतां मे जगदीश्वरी
सुधारसं सुविपुलं आपोषणमिदं
तव गृहाण कलशानीतं यथेष्टमुपभुज्ज्यताम् ||

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः |
अमृतोपस्तरणमसि स्वाहाः |
(drop water from sha|nkha)

ॐ प्राणात्मने सरस्वत्यै स्वाहा ।
ॐ आपानात्मने वाण्यै स्वाहा ।
ॐ व्यानात्मने वाग्देव्यै स्वाहा ।
ॐ उदानात्मने महाविद्यायै स्वाहा ।
ॐ समानात्मने शास्त्ररूपिण्यै स्वाहा ।
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः |

नैवेद्यं गृह्यतां देवि भक्तिं मे अचलां कुरु |
ईप्सितं मे वरं देहि इहत्र च परां गतिं ||

श्री देव्यै नमस्तुभ्यम् महा नैवेद्यं उत्तमम् |
संगृहाण सुरश्रेष्ठिन् भक्ति मुक्ति प्रदायकम् ||

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | नैवेद्यं समर्पयामि ||
(cover face with cloth and chant gayatri mantra five times or repeat 12 times दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः )

सर्वत्र अमृतोपिधान्यमसि स्वाहाः ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | उत्तरापोषणं समर्पयामि ||

(let flow water from shankha)

---

५० महा फलं
(put tulsi / axathaa on a big fruit)
इदं फलं मया देवी स्थापितं पुरतस्तव |
तेन मे सफलावाप्तिर्भवेत् जन्मनि जन्मनि ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | महाफलं समर्पयामि |

---

५१ फलाष्टक (put tulsi/akshata on fruits)
कूष्माण्ड मातुलिङ्गम् च कर्कठी दाडिमी फलम् |
रम्भा फलं जम्बीरं बदरं तथा ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | फलाष्टकं समर्पयामि ||

---

५२ करोद्वर्तन

करोद्वर्तनकं देवी मया दत्तं हि भक्तितः |
चारु चंद्र प्रभां दिव्यं गृहाण जगदीश्वरी ||

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | करोद्वर्तनार्थे चंदनं समर्पयामि ||

---

५३ तांबूलं

पूगीफलं सतांबूलं नागवल्लि दलैर्युतम् |
ताम्बूलं गृह्यतां देवी येल लवंग सम्युक्तम् ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | पूगीफल ताम्बूलं समर्पयामि||

---

५४ दक्षिणा

हिरण्य गर्भ गर्भस्थ हेमबीज विभावसोः |
अनन्त पुण्य फलदा अथ शान्तिं प्रयच्छ मे ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | सुवर्ण पुष्प दक्षिणां समर्पयामि ||

---

५५ महा नीराजन

ॐ श्रियै जातः श्रिय अनिरियाय श्रियं वयो जरितृभ्यो ददाति
श्रियं वसाना अमृतत्वमायन् भवंति सत्य स मिथामितद्रौ
श्रिय एवैनं तत् श्रियामादधाति संततमृचा वषट्कृत्यं संतत्यै संधीयते प्रजया पशुभिः य एवं वेद ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः |
महानीराजनं दीपं समर्पयामि ||

---

५६ कर्पूर दीप

अर्चत प्रार्चत प्रियमेधासो अर्चत |
अर्चन्तु पुत्रका उत पुरं धृष्णवर्चत ||
नीराजनम् सकर्पूरम् घृतवर्ति समन्वितम् |
गृहाण मङ्गलम् दीपम् सरस्वत्यै नमोस्तुते ||

कर्पूरकं महाराज्ञी रंभोद्भूतं च दीपकम् |
मङ्गलार्थं महादेवी सङ्गृहाण जगन्माते ||

O! saraswati, may I offer this auspicious light of camphor and wick smeared with ghee. I salute You.

(play the camphor light three times in a circular motion before the image of saraswati.

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | कर्पूर दीपं समर्पयामि ||

---

५७ आरती

शारदे ओ विशारदे ।
विघ्न विनाशनि शारदे ॥
ज्योति स्वरूपिणि शारदे ।
आत्म स्वरूपिणि शारदे ॥

॥ ॐ जय जगदीश् हरे ॥

(you can add more AratI songs as needed)

---

५८ प्रदक्षिणा

यानि कानि च पापानि जन्मांतर कृतानि च |
तानि तानि विनश्यन्ति प्रदक्षिण पदे पदे ||

अन्यथा शरणं नास्ति त्वमेव शरणं मम ।
तस्मात् कारुण्य भावेन रक्ष रक्ष जनार्दनी ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । प्रदक्षिणान् समर्पयामि ॥

-------------------------------------------------------------------

५९ नमस्कार

या कुन्देन्दु-तुषारहार-धवला या शुभ्र-वस्त्रावृता
या वीणावरदण्डमन्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युत-शंकर-प्रभृतिभिर्देवैः सदा पूजिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा॥

शत्येनापि नमस्कारान् कुर्वतः जगदीश्वरि ।
शत जन्मार्चितम् पापं तत्क्शणदेवि नश्यति ॥

पाहि पाहि जगत्वन्द्ये समस्त भक्तवत्सले ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ।।
Save me O! Saraswati, who is worshipped by the entire universe and bestower of goodwill to Her Devotees, I prostrate to You.
दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | नमस्कारान् समर्पयामि ||

-------------------------------------------------------------------

६० राजोपचार

गृहाण परमेश्वरी सरत्ने छत्र चामरे ।
दर्पणं व्यजनं चैव राजभोगाय यत्नतः ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । छत्रं समर्पयामि॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । चामरं समर्पयामि ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । गीतं समर्पयामि॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । नृत्यं समर्पयामि ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । वाद्यं समर्पयामि ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । दर्पणं समर्पयामि ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । व्यजनं समर्पयामि॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । आन्दोलनं समर्पयामि॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । राजोपचारान् समर्पयामि ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । सर्वोपचारान् समर्पयामि ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः । समस्त राजोपचारार्थे अक्षतान् समर्पयामि ॥

-------------------------------------------------------------------

६१ मंत्र पुष्प

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥

विद्या बुद्धि धनेश्वर्य पुत्र पौत्रादि संपदः ।
पुष्पांजलि प्रदानेन देहिमे ईप्सितं वरम् ॥

ॐ स्वस्ति साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठां राज्यं महाराज्यमाधिपत्यमयं समंत पर्यायी स्यात् सार्वभौमः सार्वायुष आंतादा परार्धात् पृथिव्यै समुद्रपर्यंताया एकराळिति तदप्येषः

श्लोकोऽभिगीतो मरूतः परिवेष्टारो मरुतस्या वसन्
ग्रहे आवीक्षितस्य कामप्रेर्विश्वेदेवा सभासद इति ||

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | मंत्रपुष्पं समर्पयामि ||

------------------------------------------------------------------

६२ शङ्ख ब्रमण (make three rounds of shankha with water like arati and pour down; chant ॐ 9 times and show mudras)

इमां आपशिवतम इमं सर्वस्य भेषजे |
इमां राष्ट्रस्य वर्धिनि इमां राष्ट्र भ्रतोमत ||

------------------------------------------------------------------

६३ तीर्थ प्राशन

शरीरे झर्झरी भूते व्यादिग्रस्थे कलेवरे ।
औषधं जाह्नवी तोयं वैद्यो नारायणो हरिः ॥

अकाल मृत्यु हरणं सर्व व्याधि निवारणम् |
सर्व पाप उपशमनम् श्री सरस्वती पादोदकं शुभम् ||

------------------------------------------------------------------

६४ प्रार्थना

त्वमेव वाणिनिखिलाश्च वेदा |
त्वम्शब्दः शक्तिश्च तदार्थ शक्तिः ||
त्वम्ब्रह्मविद्यासिपरा परेशि |
त्वाम्ब्रह्मस्कति शरणम् प्रपद्ये ||

O! Goddess Maha Saraswati, who is worshipped by all in the world, be pleased with me all the time.

(place a flower at the feet of the deity )

अर्घ्य प्रदानं

श्री दुर्गालक्ष्मीयुक्तां सरस्वती व्रत सम्पूर्ण फल प्राप्तयर्थं अर्घ्य प्रदानं
करिष्ये |

नीलोत्पलदल श्यामे पुण्डरीक निभानने |
गन्धपुष्पफलस्तोयै गृहाणर्घ्यं नमोस्तुते ||
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | अर्घ्यं समर्पयामि||

------------------------------------------------------------------

६५ आत्म समर्पण

यस्य स्मृत्या च नाम्नोक्त्या तपः पूजा क्रियादिषु |
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तं अच्युतम् ||

अनेन् मया कृतेन्, श्री सरस्वती व्रतेन्,
श्री सरस्वती सुप्रीता सुप्रसन्ना वरदा भवतु|
मध्ये मन्त्र तन्त्र स्वर वर्ण न्यूनातिरिक्त लोप दोष प्रायश्चित्तार्थं देवि नामत्रय महामन्त्र जपं करिष्ये ||

ॐ गौर्यै नमः ॐ शिवायै नमः ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः
ॐ गौर्यै नमः ॐ शिवायै नमः ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः
ॐ गौर्यै नमः ॐ शिवायै नमः ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः

मन्त्रहीनम्, क्रियाहीनम्, भक्तिहीनम् ज़नार्दनि |

यत् पूजितम् मया देवि परिपूर्णम् तदस्तु मे ||
कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृति स्वभावात् |
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि ||

तत्सपर्या विधौ देवि यत्किन्चित्साधिकं मया ।
क्षमस्व तदिदं सर्वं कृपालो शुभ लक्शणे ॥

नमस्करोमि | श्री दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः प्रसादं शिरसा गृह्णामि ||

---

६६ उपयन दानं - ब्राह्मण सुवासिनि पूजा
(wash feet wipe offer gandha kumkum flowers Prasad, fruits and gifts and make obeisances)

ब्राह्मणाय वायन दानं

इष्ट काम्यार्थ प्रयुक्त संयगाचरित श्री सरस्वती पूजां सम्पूर्ण फल वाप्यर्थं श्रीनारायण स्वरूपाय ब्राह्मणाय वायन दानं करिष्ये ॥

श्रीनारायण स्वरूपाय ब्राह्मणाय आवाहन पूर्वक आसन गन्ध अक्षत धूप दीपादि सकलाराधनै स्वर्चितम् ।

नारायण प्रतिगृह्णातु नारायणो वै ददाति च ।
नारायणो तारकोभ्यां नारायणाय नमो नमः ।

भवान्यश्च महादेव्या व्रत सम्पूर्णहेतवे ।
प्रीतये द्विजवर्याय वायनम् प्रददाम्यहम् ॥

(offer coconuts to brahmins with dakshiNa)

वायनदानं प्रतिगृह्णातु ॥

सुवासिन्ये वायन दानं

सरस्वती तिद्वन्तं गृह्णातु चेदं ददाति च ।
उभयोस्तारक सरस्वती भवान्येते नमो नम्ः ॥

स्वलंकृताः सुवासिन्याः पातिव्रत्येन भूषिताः ।
ममाभीष्ट समृद्यर्थं प्रतिगृह्णन्तु वायनं ॥

---

६७ प्रसाद ग्रहणं

सर्व मंगल मांगल्ये शिवे सर्वार्थ साधिके ।
शरण्ये त्र्यम्बिके गौरी नारायणी नमोस्तुते ॥

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः ।
सरस्वती देवी प्रसादं शिरसा गृह्णामि ॥

---

६८ विसर्जन पूजा
आराधितानां देवतानां पुनः पूजाम् करिष्ये ॥
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः ।

पुनः पूजा

chant dhyaan shloka

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | ध्यायामि| ध्यानं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | आवाहयामि |

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | आसनं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | पाद्यं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | अर्घ्यं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | आचमनीयं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | पन्चामृत स्नानं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | मह अभिषेकं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | वस्त्रयुग्मं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | यज्ञोपवीतं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | गन्धं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | नान परिमल द्रव्यं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | हस्तभूषणं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | अक्षतान् समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | पुष्पं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | नाना अलङ्कारं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | अंग पूजां समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | पुष्प पूजां समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | पत्र पूजां समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | आवरण पूजां समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | अष्टोत्तर पूजां समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | धूपं आघ्रापयामि
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | दीपं दर्शयामि
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | नैवेद्यं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | महाफलं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | फलाश्स्टकं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | करोद्वर्थनकं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | ताम्बूलं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | दक्षिणां समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | महानीराजनं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | कर्पूर दीपं समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | प्रदक्षिणां समर्पयामि |

ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | नमस्कारान्
समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | राजोपचारं
समर्पयामि |
ॐ दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | मन्त्रपुष्पं
समर्पयामि |

पूजांते छत्रं समर्पयामि | चामरं समर्पयामि |
नृत्यं समर्पयामि | गीतं समर्पयामि |
वाद्यं समर्पयामि | आंदोलिक् आरोहणं समर्पयामि |
अश्वारोहणम् समर्पयामि | गजारोहणं समर्पयामि |

दुर्गालक्ष्मीयुक्तां सरस्वत्यै नमः | समस्त राजोपचार
देवोपचार शक्त्युपचार भक्त्युपचार
पूजां समर्पयामि ||

-------------------------------------------------------------------

६९ क्षमापनं

अपराध सहस्राणि क्रियन्ते अहर्निशं मया |
तानि सर्वाणि मे देवि क्षमस्व परमेश्वरि ||

यान्तु देव गणाः सर्वे पूजां आदाय पार्थिवीम् |
इष्ट काम्यार्थ सिद्ध्यर्थं पुनरागमनाय च ||

(shake the kalasha)

-------------------------------------------------------------------

Puja Text – Sri S.A.Bhandarkar
Transliterated by Sowmya Ramkumar
Send corrections to
(somsram[at]gitaaonline.com)
Last updated on Oct 13, 2013